## अथ राहुक्षेपानयनम् ।

अह = १५३१५१६
पा भ = २३२२२६

९१८९०९६
३०६३०३२
३०६३०३२
३०६३०३२
४५९४५४८
३०६३०३२

युक्तु = १५७७९१७५०० ) अह × पाभ = ३५५६५७८३४६'१६ ( २२५।४।२२।५४।४२ पातक्षेप.

पात = १०।२२।५४।४२
अथ चक्र शुद्धो जातो
राहुः = १।७।५।१८

३१५५८३५०
४००७४३३४
३१५५८३५०
८५१५९८४६
७८८९५८७५
६२६३९७११६
१२
१२५२७९४२३२
६२६३९७११६
७५१६७६५३'९२
६३११६७००
१२०५०९५३९२
३६१५२८६१७'६०
३१५५८३५०
४५९४५११७
३१५५८३५०
१४३८६७६७६०
८६३२०६०५६'००
७८८९५८७५
७४२४७३०६
६३११६७००
१११३०६०६००
६६७८३६३६०'००
६३११६७००
३६६६९३६०
३१५५८३५०
५१११०१०००

लक्षमतेन राहुबीजं
कलात्मकंमृणम्
$= \frac{(१०१४-४२०) \times ९६}{२५०}$
$= \frac{५९४ \times ९६}{२५०} = २२८'।६''$
$= ३^{\circ}।४८'।६''$
रा
अह रा = १ । ७° । ५' । १८''
बीजम् = ३ । ४८ । ६''
वा. क्षे = १ । ३ । १ ७ । १२
अयमाचार्योक्तक्षेपसम एव

## अथ चन्द्रोच्चक्षेपानयनम् ।

अह = १५३१५१६
च उ भ = ४८८२१९

१३७८३६४४
१५३१५१६
३०६३०३२
१२२५२१२८
१२२५२१२८
६१२६०६४

युक्त = १५७७९११७५'८०) अह × च उ भ = ७४७७१५२१००'४०(४७३।१०।१०।२०।७
६३११६७००
११६५४८७१०
११०४५४२२५
६०९३१८५०
४७३३७५२५
१३६०७३२५०४
१२
२७२०४६५००८
१३६०७३२५०४
१६३३८७९००'४८
१५७७९११७५
५४३६१५०४८
१६३०८४५१४'४०
१५७७९११७५
५२९२७६४४०
३१७५६५५८६४'००
३१५५८३५०
१९८२३६४४००
११८९४१८४०'००
११०४५४२२५
८४८७६१५००

उच्चक्षेपः ३
उच्चम् = १।१०।२०।७

लल्लमतेने बुधोच्चबीज कलात्मके मृणम्

$= \frac{(१०१४-४२०) \times ४१४}{२५०}$

$= \frac{५९४ \times ११४}{२५०} = २७०'।५५''$

$= ४^\circ।३०'।५२''$

अह च उ = १।१०।२०।८
बीजम् = ४।३०।५२
ना. क्षे = १।५।४९।१६

अयमाचार्योक्तसम एव

चन्द्रग्रहणस्य २० श्लोके ।

आर्यभटमते सर्वे युगपादाः समाः । अतः कलियुगादौ सपातार्क-भगणाः $=\frac{३\times४५५२२२२६}{४}$ एते द्विगुणाः समतष्टाः शेषमितः पर्वपतिः । अ-तस्ते द्विगुणाः $=\frac{३\times४५५२२२२६\times२}{४}=\frac{१३६५६६६७८}{२}=$६८२८३३९ । एते स-मतष्टाः शेषं शून्यम् । अतस्तत्र वर्त्तमानो विधिः पर्वपतिः ।

अथ कलेरहर्गणस्य २७३१३३५६ एतैर्गुणनार्थं न्यासः ।

```
                 अह  =      १५३१५१६
                  गु  =    २७३१३३५६
                          ----------
                             ९१८९०९६
                            ७६५७५८०
                           ४५९४५४८
                          ४५९४५४८
                         १५३१५१६
                        ४५९४५४८
                      १०७२०६१२
                      ३०६३०३२
                    ------------------
२६२९८६२५)अह × गु    = ४१८३०८४१७२७६९६(१५९०६०९
                      २६२९८६२५
                      ---------
                      १५५३२२२६७
                      १३१४९३१२५
                      ---------
                        २३८२९०४२२
                        २३६६८७६२५
                       -----------
                          १६०२७९७७६
                          १५७७९१७५०
                          ----------
                            २४८८०२६९६
                            २३६६८७६२५
                            ---------
                             १२११५०७१
```

अतो ग्रन्थारम्भे सपातार्कदिनानि वर्त्तमानानि=१५९०६१० एतानि १८० हृतानि लब्धाः पर्वपतयः ८८३६ शेषदिनानि वर्त्तमानस्य=१३० । लब्धाः पर्वपतयः सप्ततष्टाः शिष्टौ २ तत्संबन्धीनि दिनानि=३६० वर्त्तमानपर्वपतिदिनसाहितानि जातानि विधितः सपातार्कदिनानि=३६०+१३०=४९० ।

अथाचार्योक्तप्रकारतः

$\frac{१००(अह-२४७१)}{२५९२}=\frac{१००अ}{२५९२}-\frac{२४७१\times१००}{२५९२}=\frac{१००अ}{२५९२}-९६$ ( स्वल्पान्तरतो वर्त्तमानलब्ध्यर्थं ९५ स्थाने ९६ गृहीता ) अत्र ५८७ अधिके कृते जातम्=$\frac{१००अ}{२५९२}-९६+५८७=\frac{१००अ}{२५९२}+४९१$ । अनेनाधिकेऽहर्गणे जातानि विधितः सपातार्कदिनानि=अ+$\frac{१००अ}{२५९२}$+४९१ । अत्र प्रथमं खण्डद्वयमहर्गणसम्भूतमहर्गणसंवन्धिनः सपातार्कदिवसास्ते पूर्वागतैर्ग्रन्थारम्भे विधितः समागतैः सपातार्कदिवसै ४९० रेभिः सहिता जातानि पर्वान्ते सपातार्कदिनानि=अ+$\frac{१००अ}{२५९२}$+४९० । पर्वसमाप्तिः प्रतिपदि भवति अतस्तदा पूर्वागतानि सैकानि जातान्याचार्यानीतसमानि सपातार्कदिनानि=अ+$\frac{१००अ}{२५९२}$+४९१ । खगजचन्द्र १८० हृतानि लब्धाः पर्वपतयो भवन्तीति सुधीभिर्भृशं विभावनीयम् ।

## श्रीगणेशाय नमः ।

अथ प्रसङ्गाद्ग्रहगणितोपयुक्तत्वादासन्नमानार्थंक्रिया प्रदर्श्यते,

$$\frac{१००}{६३}=१+\frac{३७}{६३}=१+\frac{१}{\frac{६३}{३७}}=१+\cfrac{१}{१+\frac{२६}{३७}}=१+\cfrac{१}{१+\cfrac{१}{\frac{३७}{२६}}}=१+\cfrac{१}{१+\cfrac{१}{१+\frac{११}{२६}}}$$

$$=१+\cfrac{१}{१+\cfrac{१}{१+\cfrac{१}{\frac{२६}{११}}}} \qquad =१+\cfrac{१}{१+\cfrac{१}{१+\cfrac{१}{२+\frac{४}{११}}}}$$

$$=१+\cfrac{१}{१+\cfrac{१}{१+\cfrac{१}{२+\cfrac{१}{\frac{११}{४}}}}} \qquad =१+\cfrac{१}{१+\cfrac{१}{१+\cfrac{१}{२+\cfrac{१}{२+\frac{३}{४}}}}}$$

$$=१+\cfrac{१}{१+\cfrac{१}{१+\cfrac{१}{२+\cfrac{१}{२+\cfrac{१}{\frac{४}{३}}}}}} \qquad =१+\cfrac{१}{१+\cfrac{१}{१+\cfrac{१}{२+\cfrac{१}{२+\cfrac{१}{१+\frac{१}{४}}}}}}$$

अत्र प्रथमलब्धिग्रहणेन मानम् $=\frac{१}{१}=\frac{१}{१}$ ।

प्रथमलब्धिद्वयग्रहणेन मानम् $=१+\frac{१}{१}=\frac{२}{१}$ ।

प्रथमलब्धित्रयग्रहणेन मानम् $१+\cfrac{१}{१+\frac{१}{१}}=\frac{३}{२}$ ।

प्रथमलब्धिचतुष्कग्रहणेन मानम् $= 1 + \cfrac{1}{1 + \cfrac{1}{1 + \cfrac{1}{2}}} = \frac{8}{5}$ ।

प्रथमलब्धिपञ्चकग्रहणेन मानम् $= 1 + \cfrac{1}{1 + \cfrac{1}{1 + \cfrac{1}{2 + \cfrac{1}{2}}}} = \frac{19}{12}$ ।

प्रथमलब्धिषट्कग्रहणेन मानम् $= 1 + \cfrac{1}{1 + \cfrac{1}{1 + \cfrac{1}{2 + \cfrac{1}{2 + \cfrac{1}{5}}}}} = \frac{27}{17}$ ।

एवमत्र $\frac{1}{1}$, $\frac{2}{1}$, $\frac{3}{2}$, $\frac{8}{5}$, $\frac{19}{12}$, $\frac{27}{17}$, वास्तवभिन्न ।

स्या $\frac{100}{63}$ स्यासन्नमानानि कथ्यन्ते। अत्र $\frac{1}{1}$ इदं मानं वास्तवभिन्नमानादल्पम्। $\frac{2}{1}$ इदं चाधिकं द्वितीयखण्डस्याधिक्यात् ।

$\frac{3}{2}$ इदं चाल्पं तृतीयखण्डस्याल्पत्वात्। एवं पाश्चुक्तभजनरीत्या स्फुटमवगम्यते यद्विषमासन्नमानानि वास्तवभिन्नादल्पानि समानि चाधिकानि सन्तीति।

एवं वर्णविन्यासेन $\frac{अ}{क} = ग + \cfrac{1}{घ + \cfrac{1}{च + \cfrac{1}{छ + \cfrac{1}{ज + \cfrac{1}{त + \cfrac{1}{द + \cfrac{1}{न + \cdots}}}}}}}$

पूर्ववल्लब्धिग्रहणेनासन्नमानानि

$$\frac{\text{ग}}{१} \mid \frac{\text{ग घ}+१}{\text{घ}} \mid \frac{\text{च}(\text{ग घ}+१)+\text{ग}}{\text{च घ}+१} \mid \frac{\text{छ}\{\text{च}(\text{गव}+१)\}+(\text{गव}+१)}{\text{छ}(\text{चव}+१)+\text{व}} \mid$$

अत्र तृतीये माने तृतीयलब्धिद्वितीयमानांशवधः प्रथममानांशयुक्तो ह्यंशः । तृतीयलब्धिद्वितीयमानहरवधः प्रथममानहरयुक्तो हि हर इति दृश्यते । एवं चतुर्थमानादिषु च रीतिर्दृश्यते तेनासन्नमानद्वयज्ञानाल्लब्धिभ्योऽन्यासन्नमानानि सुखेन ज्ञायन्ते ।

अथ पूर्वागतप्रथमद्वितीययोरासन्नमानयोरन्तरेण यद्भिन्नमुत्पद्यते तत्रांशस्थाने रूपमिति दृश्यते । अथ कल्प्यते त्रीण्यासन्नस्थितान्यासन्नमानानि $\frac{\text{अ}_{१}}{\text{क}_{१}}$ । $\frac{\text{अ}_{२}}{\text{क}}$ । $\frac{\text{अ}_{३}}{\text{क}_{३}}$ ।

$\frac{\text{अ}_{३}}{\text{क}_{३}}$ एतत् सम्बन्धिनी लब्धिश्च ल, तदा पूर्वप्रकारेण $\frac{\text{अ}_{३}}{\text{क}_{३}}=\frac{\text{लअ}_{२}+\text{अ}_{१}}{\text{लक}_{२}+\text{क}_{१}}$ अतः

$$\frac{\text{अ}_{२}}{\text{क}_{२}} \backsim \frac{\text{अ}_{३}}{\text{क}_{३}}=\frac{\text{अ}_{२}}{\text{क}_{२}} \backsim \frac{\text{लअ}_{२}+\text{अ}_{१}}{\text{लक}_{२}+\text{क}_{१}}=\frac{\text{लअ}_{२}\text{क}_{२}+\text{अ}_{२}\text{क}_{१} \backsim (\text{लअ}_{२}\text{क}_{२}+\text{अ}_{१}\text{क}_{२})}{\text{क}_{२}(\text{लक}_{२}+\text{क}_{१})}$$

$=\frac{\text{अ}_{२}\text{क}_{१} \backsim \text{अ}_{१}\text{क}_{२}}{\text{क}_{२}(\text{लक}_{२}+\text{क}_{१})}$ । अत्रांशमानं $\frac{\text{अ}_{१}}{\text{क}_{१}}$, $\frac{\text{अ}_{२}}{\text{क}_{२}}$ अनयोरन्तरांशमानसममत इष्टपृष्ठस्थयोरन्तरे यदंशमानं तदेवाग्रिमेष्टयोरन्तरे भवत्यंशमानम् । परन्तु प्रथम–द्वितीयासन्नमानयोरन्तरे त्वंशमानं रूपसमं पूर्वसिद्धं तेनासन्नस्थयोर्द्वयोरासन्नमानयोरन्तरे सर्वदांशमानं रूपं भवतीति सिध्यति ।

अथ पूर्वयुक्तितः $\text{अ}_{२}\text{क}_{१} \backsim \text{अ}_{१}\text{क}_{२}=१$ अतः पूर्वयुक्तितः $\text{अ}_{१}$.$\text{क}_{१}$ एतौ वा $\text{अ}_{२}$, $\text{क}_{२}$ एतौ परस्परं दृढौ भविष्यतो यतोऽन्यथा तदपवर्त्तनाङ्केन रूपमपवर्त्त्यं भवति तदयुक्तमित्यत आसन्नमानेषु सर्वेषु हरांशौ दृढौ भवत इति सिध्यति ।

कल्प्यते $\frac{अ_1}{क_1}, \frac{अ_2}{क_2}, \frac{अ_3}{क_3}$, आसन्नस्थानि मानानि तदा पूर्ववत्

$\frac{अ_3}{क_3}=\frac{लअ_2+अ_1}{लक_2+क_1}$ वास्तवभिन्नं च, ल स्थाने ल+इ, इत्यस्योत्थापनेन जातं

$=\frac{(ल+इ)अ_2+अ_1}{(ल+इ)क_2+क_1}$। इ=रूपाल्पसंख्या

$$\text{अतः भिन्नं}-\frac{अ_2}{क_2}=\frac{लअ_2+इअ_2+अ_1}{लक_2+इक_2+क_1}-\frac{अ_2}{क_2}$$

$$=\frac{लक_2अ_2+इक_2अ_2+अ_1क_2-लक_2अ_2-इक_2अ_2-अ_2क_1}{क_2(लक_2+इक_2+क_1)}$$

$$=\frac{क_2अ_1-क_1अ_2}{क_2(लक_2+इक_2+क_1)}=\frac{1}{क_2\left\{क_2(ल+इ)+क_1\right\}}$$

$$\text{एवं}\frac{अ_3}{क_3}-\text{भिन्नं}=\frac{लअ_2+अ_1}{लक_2+क_1}-\frac{लअ_2+अ_1+अ_2इ}{लक_2+क_1+क_2इ}$$

$$=\frac{ल^2क_2अ_2+लक_1अ_2+लक_2अ_2इ+लक_2अ_1+अ_1क_1+अ_1क_2इ}{क_3(लक_2+क_1+क_2इ)}$$

$$-\frac{ल^2क_2अ_2+लक_2अ_1+लक_2अ_2इ+लक_1अ_2+अ_1क_1+क_1अ_2इ}{क_3(लक_2+क_1+क_2इ)}$$

$$=\frac{इ(अ_1क_2-क_1अ_2)}{क_3(लक_2+क_1+क_2इ)}=\frac{इ}{क_3(लक_2+क_1+क_2इ)}$$

प्रथमान्तरस्यांशमानादस्यान्तरस्य मानमल्पं तदीयहरमानादस्य हरमानं चाधिकमत उत्तरत आसन्नमानानि सूक्ष्माणि वास्तवभिन्नस्य निकटस्थत्वादिति सिध्यति ।

अथैषां सिद्धान्तानां सूत्राणि ।

आसन्नमानस्य हरांशमाने अग्राप्तिगुण्ये सहिते क्रमेण ।
पृष्ठस्थितासन्नहरांशकाभ्यां तदा हरांशौ भवतोऽग्रिमस्य ॥ १ ॥
आसन्नमानयोरासन्नस्थयोरन्तरे भवेत् ।

अंशस्थाने सदा रूपं चिन्त्यमेतच्च सर्वदा ॥ २ ॥
सर्वेष्वासन्नमानेषु हरांशौ भवतो दृढौ ।
तथोत्तरोत्तरं सूक्ष्माण्यासन्नानि भवन्ति हि ॥ ३ ॥

कल्प्यते $\frac{अ_1}{क_1}$ इदमासन्नमानं वास्तवभिन्नात् किञ्चिदल्पम् । $\frac{स}{र}$ अस्य भिन्नस्य हरमानं $क_1$ । अस्मादल्पं तदा $\frac{स}{र}$ अस्मात् $\frac{अ_1}{क_1}$ इदमेव निकटतरं वास्तवभिन्नस्य। यद्येवं न तर्हि $\frac{अ_1}{क_1}$, $\frac{अ_2}{क_2}$ अनयोरन्तरात् $\frac{स}{र}$, $\frac{अ_1}{क_1}$, अनयोरन्तरमल्पतरम् ।

यतः $\frac{अ_1}{क_1} < \frac{स}{र} <$ वाभि $< \frac{अ_2}{क_2}$ ( $\frac{अ_2}{क_2} =$ अग्रिमासन्नम् )

अतः $\frac{अ_1}{क_1} \backsim \frac{अ_2}{क_2} = \frac{1}{क_1 क_2} > \frac{अ_2}{क_2} - \frac{स}{र}$

वा $\frac{1}{क_1 क_2} > \frac{अ_2 र - क_2 स}{क_2 र}$ वा, $\frac{1}{क_1} > \frac{अ_2 र - क_2 स}{र}$

अथ $क_1 > र$ । अतः $1 > अ_2 र - क_2 स$ । इदमसम्भवं यतः $अ_2 र$, $क_2 स$ अनयोरभिन्नसंख्ययोरन्तरं रूपाल्पमवशिष्यते ॥

कल्प्यते $\frac{अ_1}{क_1}$, $\frac{अ_2}{क_2}$ आसन्नस्थमासन्नमानद्वयं तदा $\frac{अ_1 अ_2}{क_1 क_2}$ इदं वास्तवभिन्नवर्गादधिकं यदि $\frac{अ_1}{क_1} > \frac{अ_2}{क_2}$, अन्यथाल्पमिति। यतो यदि सावयवलब्धिः = ल तदा वास्तवभिन्नम् $= \frac{ल अ_2 + अ_1}{ल क_2 + क_1}$

अतः $\frac{अ_1}{वाभि.क_1} - \frac{वाभि.क_2}{अ_2} = \frac{क_2}{वाभि\, अ_2}\left(\frac{अ_1 अ_2}{क_1 क_2} - वाभि^2\right)$

$= \frac{अ_1 (ल क_2 + क_1)}{क_1 (ल अ_2 + अ_1)} - \frac{क_2 (ल अ_2 + अ_1)}{अ_2 (ल क_2 + क_1)}$ । अथ दक्षिणपक्षस्थसंख्ययोरन्तरांशमानम् $= अ_1 अ_2 ( ल क_2 + क_1 )^2 - क_1 क_2 ( ल अ_2 + अ_1 )^2$

$= अ_1 अ_2\, ल^2 क_2^2 + 2\, अ_2 अ_1\, ल क_2 क_1 + अ_1 अ_2 क_1^2$

$-\text{क}_1\text{क}_2\,\text{ल}^2\text{अ}_2^2 - 2\text{अ}_1\text{अ}_2\text{ल}\text{क}_2\text{क}_1 - \text{क}_1\text{क}_2\text{अ}_1^2$

$= \text{ल}^2\text{अ}_2\text{क}_2\,(\text{अ}_1\text{क}_2 - \text{अ}_2\text{क}_1) - \text{अ}_1\text{क}_1\,(\text{अ}_1\text{क}_2 - \text{अ}_2\text{क}_1)$

$= (\text{ल}^2\text{अ}_2\text{क}_2 - \text{अ}_1\text{क}_1)\,(\text{अ}_1\text{क}_2 - \text{अ}_2\text{क}_1)$

अत्र $(\text{ल}^2\text{अ}_2\text{क}_2 - \text{अ}_1\text{क}_1)$ इदं सर्वदा धनमेव

यतः $\text{ल} > 1 \therefore \text{ल}^2 > 1$ अथ $\text{अ}_2 > \text{अ}_1$ । $\text{क}_2 > \text{क}_1$

$\therefore \text{अ}_2\text{क}_2 > \text{क}_1\text{अ}_1$ । अथ $\text{अ}_1\text{क}_2 - \text{अ}_2\text{क}_1 = \text{क}_1\text{क}_2\left(\frac{\text{अ}_1}{\text{क}_1} - \frac{\text{अ}_2}{\text{क}_2}\right)$

इदं तु यदा $\frac{\text{अ}_1}{\text{क}_1} > \frac{\text{अ}_3}{\text{क}_2}$ तदा धनमतस्तदा

$\frac{\text{क}_2}{\text{वाभि}.\text{अ}_2}\left(\frac{\text{अ}_1\text{अ}_2}{\text{क}_1\text{क}_2} - \text{वाभि}^2\right)$ इदं वा

$\frac{\text{अ}_1\text{अ}_2}{\text{क}_1\text{क}_1} - \text{वाभि}^2$ इदं धनं भविष्यति ।

ततः $\frac{\text{अ}_1\text{अ}_2}{\text{क}_1\text{क}_2} > \text{वाभि}^2$ इदमुपपन्नं भवति ।

अतः सूत्रावतारः ।

आसन्नमानहरतो यद्भिन्नस्य हरो भवेत् ।
अल्पः साऽऽसन्नमानात् स्यान्नाहो सूक्ष्मतरो विदः ॥ १ ॥
द्वयोरासन्नयोरासन्नस्थयोराहतिर्भवेत् ।
कृतेर्वास्तवभिन्नस्याधिका पूर्वाधिकेऽग्रिमात् ॥ २ ॥

अथ प्रसङ्गाच्चक्रवालोपपत्तिः ।

कल्प्यते प्र, प्रकृतौ क्षे, क्षेपे क, कनिष्ठं, ज्ये, ज्येष्ठं तथा तस्यामेव प्रकृतौ रूपक्षेपे कनिष्ठे इ, ज्येष्ठम् । $\text{इ}^2 - \text{प्र} =$ क्षेपस्ततो भावनया

$\left.\begin{matrix}\text{क}, & \text{ज्ये}, & \text{क्षे}, \\ 1, & \text{इ}, & \text{इ}^2 - \text{प्र}\end{matrix}\right\}$ आभ्यां नूतनकनिष्ठज्येष्ठक्षेपाः ।

$\text{क}' = \text{इक} + \text{ज्ये}$ । $\text{ज्ये}' = \text{क}\,\text{प्र} + \text{इज्ये}$ । $\text{क्षे}' = \text{क्षे}\,(\text{इ}^2 - \text{प्र})$ "इष्टवर्गहृतः क्षेप" इत्यादिना क्षे इष्टं प्रकल्प्य जाताः कनिष्ठज्येष्ठक्षेपाः

$\text{क}'' = \frac{\text{इ}.\text{क} + \text{ज्ये}}{\text{क्षे}}$ । $\text{ज्ये}'' = \frac{\text{प्र}.\text{क} + \text{इ}.\text{ज्ये}}{\text{क्षे}}$ । $\text{क्षे}'' = \frac{\text{इ}^2 - \text{प्र}}{\text{क्षे}}$ अतोऽत्र चेत् क-

निष्ठमभिन्नमपेक्षितं तदा प्रथमकनिष्ठं तथा केनचिदिष्टेन गुण्यं ज्येष्ठ-युक्तं क्षेपभक्तं यथा विशुध्येत् । तदर्थमाचार्येण कुट्टकः कृतः । अत उपपन्नं ह्रस्वज्येष्ठपदक्षेपान् इत्यादि भास्करोक्तं चक्रवालम् । एवमभिन्नं यत्कनिष्ठ-मुत्पद्यते तत्र क्षेपश्च $\frac{\text{इ}^2-\text{प्र}}{\text{क्षे}}$ अयम् ।

अत्र भाज्यसंख्या यदि विपरीतशोधनेन भिन्ना स्यात्तदा क्षेपहृता लब्धिः क्षेपविजातीयातो 'व्यस्तः प्रकृतितश्च्युत इति युक्तमुक्तं भास्क-राचार्यैः ।

अथ नूतनः क्षेपः $\frac{\text{इ}^2-\text{प्र}}{\text{क्षे}}$ अयं सर्वदाऽभिन्न एवागच्छति तेन $\text{इ}^2-\text{प्र}$ इयं क्षेपेण निःशेषा भवतीत्यस्य कारणज्ञानार्थं कतिपयदृढाङ्कसिद्धान्तान् प्र-तिपादयामि ।

कल्प्यते अ, क, संख्ये मिथो दृढे । क, ग अनयोर्घातश्च अ, सं-ख्यया शुध्यति तदा अ संख्यया ग संख्या निःशेषा भवति ।

अ < क इति कल्पनीयम् । तथा परस्परभजनाल्लब्धयः $\text{ल}, \text{ल}', \text{ल}''$, इत्या-दयः $\text{शे}, \text{शे}', \text{शे}''$, इत्यादयः शेषाश्च कल्प्यास्तदा $\text{क}=\text{अ}.\text{ल}+\text{शे}$, $\text{अ}=\text{शे}\ \text{ल}'+\text{शे}'$, $\text{शे}=\text{शे}'\ \text{ल}''+\text{शे}''$, प्रत्येकं ग संख्यया संगुण्य अ-संख्यया यदि विभज्यते तदा $\frac{\text{क ग}}{\text{अ}}=\text{ग}.\text{ल}+\frac{\text{ग}.\text{शे}}{\text{अ}}$ । $\text{ग}=\frac{\text{ग}.\text{शे}}{\text{अ}}\ \text{ल}'+\frac{\text{ग}.\text{शे}'}{\text{अ}}$

$\frac{\text{ग}.\text{शे}}{\text{अ}}=\frac{\text{ग}.\text{शे}'}{\text{अ}}\times\text{ल}''+\frac{\text{ग}.\text{शे}''}{\text{अ}}$,........ ........, अथ $\frac{\text{क}.\text{ग}}{\text{अ}}$ इयं सं-ख्या ह्यभिन्ना तेन $\frac{\text{ग}.\text{शे}}{\text{अ}}$ इयमपि अभिन्ना भविष्यति, ततः $\frac{\text{ग}\times\text{शे}'}{\text{अ}}$ इयं चा-भिन्ना ततः $\frac{\text{ग}\times\text{शे}''}{\text{अ}}$ इयमपि अभिन्ना सिध्यति ।

एवं सर्वे शेषा ग गुणिताः अहृताः शुध्यन्तीति सिध्यति ।

अथ अ, क संख्ये मिथो दृढे तेनान्तिमः शेषो रूपसमस्तद्गुणिता ग संख्या, अविकृता अहृता शुद्धा भवतीति सिध्यति ।

अथ वा यदि $\frac{\text{क}}{\text{अ}}$ भिन्नस्य यत्र हरांशौ मिथो दृढौ पृष्ठस्थासन्नमानम्=$\frac{\text{क}_{२}}{\text{अ}_{२}}$ तदा आसन्नसिद्धान्तेन $\frac{\text{क}_{२}}{\text{अ}_{२}} \sim \frac{\text{क}}{\text{अ}} = \frac{\text{अक}_{२} \sim \text{अ}_{२}\text{क}}{\text{अ अ}_{२}}$

अत्र $\text{अक}_{२} - \text{अ}_{२}\text{क} = \pm १$ इदं ग गुणितं जातम् ।

$\text{अ क}_{२}\text{ग} - \text{अ}_{२}\text{क ग} = \pm \text{ग}$ अत्र वामभागस्था संख्या अभक्ता निःशेषा भवतीत्यतः ग संख्यापि अभक्ता निःशेषा भवतीति लाघवेन सिध्यति ।

अथ पूर्वकनिष्ठज्येष्ठवशेन पूर्वक्षेपः $= \text{प्रक}^{२} - \text{ज्ये}^{२}$ अतो ज्येष्ठकनिष्ठमहत्तमापवर्त्तनवर्गेण क्षेपोऽपवर्त्त्यस्तेनेष्टवर्गेण हृतः इत्यादिना लघुक्षेपे सुखेन कनिष्ठज्येष्ठे ज्ञातुं शक्येते । एवं यदाऽपवर्तनाभावस्तदैव लघुतमक्षेपे तत्कनिष्ठज्येष्ठे गृहीत्वा ततो ह्रस्वज्येष्ठपदक्षेपेभ्यः परस्परं दृढेभ्यः कुट्टकः कर्त्तव्यः । अतोऽत्र ये कनिष्ठज्येष्ठक्षेपास्ते परस्परं दृढा एव ।

ततोऽभिन्नं नूतनकनिष्ठम् $= \frac{\text{इ}\cdot\text{क} + \text{ज्ये}}{\text{क्षे}}$ अस्मादिष्टमानम् $= \frac{\text{नूक क्षे} - \text{ज्ये}}{\text{क}}$

अस्य नूतनज्येष्ठस्या $\frac{\text{प्र} \times \text{क} + \text{इ} \times \text{ज्ये}}{\text{क्षे}}$ स्यांशमाने ह्युत्थापने कृते जातमंशमानम्$= \frac{\text{ज्ये}\cdot\text{नूक}\cdot\text{क्षे} - \text{ज्ये}^{२} + \text{प्र}\cdot\text{क}^{२}}{\text{क}} = \frac{\text{ज्ये}\cdot\text{नूक}\cdot\text{क्षे} - \text{क्षे}}{\text{क}} = \frac{\text{क्षे}\,(\text{ज्ये}\cdot\text{नूक} - १)}{\text{क}}$

अथेदमंशमानमभिन्नं क्षेपकनिष्ठे च मिथो दृढे तेन कनिष्ठभक्त-

$(\text{ज्ये}\cdot\text{नूक} - १)$मिदं शुध्येदेव पूर्वयुक्त्या, ततो जातमंशमानं नूतनज्येष्ठस्य $= \text{क्षे} \times \text{ल}$ । अत्र $\text{ल} = \frac{\text{ज्ये नूक} - १}{\text{क}} =$ अभिन्नसंख्यासमा ।

अथ नूतनज्येष्ठांशमानं हरेण क्षेपसमेन भक्तं जातमभिन्नं नूतनज्येष्ठमानम् = ल, ततः प्रकृतिकनिष्ठज्येष्ठाणामभिन्नत्वान्नूतनक्षेपोऽप्यभिन्न एवेत्यर्थत एव सिध्यति । इदं ज्येष्ठक्षेपयोरभिन्नत्वसाधनं पूर्वैर्न क्वापि स्पष्टमतो मदुक्तं बुद्धिमद्भिर्भृशं विचिन्त्यम् । नूतनज्येष्ठज्ञानं च नूतनकनिष्ठवर्गादिना विनैव मत्कृतमतीवोपयुक्तमिदम् ।

पूर्वज्येष्ठहतं नूत्नकनिष्ठं रूपहीनितम् ।
पूर्वह्रस्वहृतं लब्धं नवीनज्येष्ठसंमितिः ॥

अथ यद्यासन्नमानोक्तविधिनाऽवर्गस्य मूलमानीयते तदाऽधोलिखितक्रियोत्पद्यते। तस्यां च शान्तो विततभिन्नो न भविष्यति यतस्तथात्वे करणी परिच्छिन्नमाना भविष्यति तच्चासम्भवम्। अतो विततभिन्नेऽनन्ते पुनस्ता एव लब्धय आवर्त्तरूपा आगमिष्यन्ति। ताभिरुत्तरोत्तरं करणीमानासन्नमानानि सूक्ष्माणि भविष्यन्ति।

यथा $\sqrt{११}=\frac{\sqrt{११}+०}{१}=३+\frac{\sqrt{११}-३}{१}=३+\frac{(\sqrt{११}-३)(\sqrt{११}+३)}{\sqrt{११}+३}$

$$=३+\frac{२}{\sqrt{११}+३}=३+\frac{१}{\frac{\sqrt{११}+३}{२}}=३+\frac{१}{३+\frac{\sqrt{११}+३-६}{२}}=३+\frac{१}{३+\frac{\sqrt{११}-३}{२}}$$

$$=३+\frac{१}{३+\frac{२}{२(\sqrt{११}+३)}}=३+\frac{१}{३+\frac{१}{\sqrt{११}+३}}=३+\frac{१}{३+\frac{१}{\frac{\sqrt{११}+३}{१}}}$$

$$=३+\frac{१}{३+\frac{१}{६+\frac{\sqrt{११}-३}{१}}}=३+\frac{१}{३+\frac{१}{६+\frac{२}{\sqrt{११}+३}}}$$ इत्यादि,

एवमत्र ३, ३, ६, इत्यादिलब्धिग्रहणेनैकादशमूलस्यासन्नमानानि आसन्नमानोक्त्याऽऽगमिष्यन्ति।

एवमक्षरविन्यासेन

$\frac{\sqrt{न}+०}{१}=अ+\frac{\sqrt{न}-अ}{१}=अ+\frac{शे}{\sqrt{न}+अ}$ यदि $शे=न-अ^{२}$ तथा

न इत्यस्य निरग्रमूलम् $=अ$।

$\frac{\sqrt{न}+अ}{शे}=क+\frac{\sqrt{न}+अ-शे\,क}{शे}=क+\frac{शे'}{\sqrt{न}+अ'}$, यदि $अ'=शे.क-अ$।

तथा $शे' = \frac{न - अ'^2}{शे}$ । अत्र न इत्यस्य निरग्रमूलं अ—संज्ञकेन युक्तं शे—संज्ञया भक्तं यन्निरग्रलब्धं भवेत्तत् क—संज्ञं बोध्यम् ।

एवं तथैव

$$\frac{\sqrt{न} + अ'}{शे'} = क' + \frac{\sqrt{न} + अ' - शे' क'}{शे'} = क' + \frac{शे''}{\sqrt{न} + अ''} \text{ यदि } अ'' = शे'. क' - अ',$$

तथा $शे'' = \frac{न - अ''^2}{शे'}$ ।

अत्र न इत्यस्य यन्निरग्रमूलं तत् अ'—संज्ञकेन युक्तं शे'—संज्ञया भक्तं यन्निरग्रलब्धं तत् क'—संज्ञं ज्ञेयमेवमग्रेऽपि बोध्यामित्येवं यद्यप्यत्र स्फुटं दृश्यते शे, शे', शे'', इत्यादीनां तथा अ, अ', अ'', इत्यादीनां च धनत्वं तथापि स्पष्टार्थं सद्युक्तिः प्रदर्श्यते ।

कल्प्यते कस्याप्यासन्नमूले क्रमेण त्रयाणां राशिसमूहानां मानानि ।

०, अ, अ', अ'', अ''', .... .... .... ( १ )

१, शे, शे', शे'', शे''', .... .... .... ( २ )

अ, क, क', क'', क''', .... .... .... ( ३ )

कल्प्यते (१) अस्मिन् क्रमेण किमपि राशित्रयमानं $अ_1$, $अ'_1$, $अ''_1$, तत्सम्बन्धिराशित्रयं (२) अस्मिन् $शे_1$, $शे'_1$, $शे''_1$, । $क_1$, $क'_1$, $क''_1$, च राशित्रयं ( ३ ) अस्मिन्, तथा $क_1$, $क'_1$, $क''_1$, वशादासन्नमूलस्यासन्नमानानि $\frac{प}{ल}$, $\frac{प'}{ल'}$, $\frac{प''}{ल''}$, चेति । तदाऽऽसन्नमानानयनविधिना

$\frac{प''}{ल''} = \frac{क''_1 . प' + प}{क''_1 . ल' + ल}$, अथ $क''_1$ स्थाने यदि सावयवा वास्तवा लब्धिः

$\frac{\sqrt{न} + अ''_1}{शे'_1}$ इयं गृह्यते तदा $\sqrt{न} = \dfrac{\frac{\sqrt{न} + अ''_1}{शे'_1} . प' + प}{\frac{\sqrt{न} + अ''_1}{शे'_1} . ल' + ल} = \dfrac{प'(\sqrt{न} + अ''_1) + शे'_1 प}{ल'(\sqrt{न} + अ''_1) + शे'_1 ल}$

पक्षौ समच्छेदीकृत्यासम्भवसम्भवयोः पृथक् पृथक् समीकरणं कृत्वा जातं समीकरणद्वयम् । $\text{अ}''_{1}\,\text{प}'+\text{शे}''_{1}\,\text{प}=\text{न}\,\text{ल}'$ । $\text{अ}''_{1}\,\text{ल}'+\text{शे}''_{1}\,\text{ल}=\text{प}'$ । ततः

$$\text{अ}''_{1}(\text{प}.\,\text{ल}'-\text{प}'.\,\text{ल})=\text{प}.\,\text{प}'-\text{ल}.\,\text{ल}'.\,\text{न}=\text{ल}\,\text{ल}'\left(\frac{\text{प}\,\text{प}'}{\text{ल}.\,\text{ल}'}-\text{न}\right)$$

$$\text{शे}''_{1}(\text{प}.\,\text{ल}'-\text{प}'.\,\text{ल})=\text{ल}'^{2}\text{न}-\text{प}'^{2}=\text{ल}'^{2}\left(\text{न}-\frac{\text{प}'^{2}}{\text{ल}'^{2}}\right)$$

वा, $\text{ल}\text{ल}'\text{अ}''_{1}\left(\frac{\text{प}}{\text{ल}}-\frac{\text{प}'}{\text{ल}'}\right)=\text{ल}\text{ल}'\left(\frac{\text{प}\text{प}'}{\text{ल}\text{ल}'}-\text{न}\right)$

अतः $\text{अ}''_{1}\left(\frac{\text{प}}{\text{ल}}-\frac{\text{प}'}{\text{ल}'}\right)=\frac{\text{प}.\,\text{प}'}{\text{ल}.\,\text{ल}'}-\text{न}$ । अत्र यदि $\frac{\text{प}}{\text{ल}}>\frac{\text{प}'}{\text{ल}'}$ तदा $\frac{\text{प}.\,\text{प}'}{\text{ल}.\,\text{ल}'}>\text{न}$ यदि च $\frac{\text{प}}{\text{ल}}<\frac{\text{प}'}{\text{ल}'}$ तदा $\frac{\text{प}\text{प}'}{\text{ल}\text{ल}'}<\text{न}$

आसन्नमानान्तिमसूत्रात् । तेन $\text{अ}''_{1}$ इत्यस्य मानं सर्वदा धनम् ।

एवं $\text{ल}\text{ल}'\text{शे}''_{1}\left(\frac{\text{प}}{\text{ल}}-\frac{\text{प}'}{\text{ल}'}\right)=\text{ल}'^{2}\left(\text{न}-\frac{\text{प}'^{2}}{\text{ल}'^{2}}\right)$

अतः $\text{ल}\text{शे}''_{1}\left(\frac{\text{प}}{\text{ल}}-\frac{\text{प}'}{\text{ल}'}\right)=\text{ल}'\left(\text{न}-\frac{\text{प}'^{2}}{\text{ल}'^{2}}\right)$ अत्र ल, $\text{ल}'$, सर्वदा धनं तथा यदा $\frac{\text{प}}{\text{ल}}>\frac{\text{प}'}{\text{ल}'}$ तदा $\text{न}>\frac{\text{प}'^{2}}{\text{ल}'^{2}}$ यदा च $\frac{\text{प}}{\text{ल}}<\frac{\text{प}'}{\text{ल}'}$ तदा $\text{न}<\frac{\text{प}'^{2}}{\text{ल}'^{2}}$

अतः $\text{शे}''_{1}$ इत्यस्य मानं सर्वदा धनं सिध्यति,

अथ ( १ ) अस्मिन् ०, अ एतद्द्वयं धनं तथा ( २ ) अस्मिन् १, शे, इति च धनमस्तीति स्फुटं दृश्यते, तेन किमपि राशित्रयं गृहीत्वा पूर्वोक्तरीत्या यदि क्रिया कर्त्तव्या तदा तृतीयो धनात्मकः सिध्यति ।

अतः ( १ ), ( २ ) अनयोः सर्वे राशयो धनात्मकाः सन्ति ।

( १ ) अस्मिन् महत्तमपदमानं “ अ ” भविष्यति यतः पदानां

रचनानुसारेण $शे_1 \, शे'_1 = न - अ_1^2$ परन्तु $शे_1 \, शे'_1$ इदं धनं तेन $न > अ_1^2$, अतो निरग्रमूलात् अमानात् $अ_1$ इदमल्पमेव । ( २ ), ( ३ ) अनयोः किमपि पदं २अ—अस्मादधिकं न भविष्यति यतो रचनानुसारेण $अ_1 + अ'_1 = शे'_1 \, क'_1$ । अथ $अ_1$, $अ'_1$ एतद्द्वयमपि "अ" अस्मादल्पमतः $शे'_1$ इदं वा $क_1$ इदं द्वयमपि २अ—मानादल्पं भविष्यति । यदि $शे''_1 = १$ तदा $अ'_1 = अ$ । यतः पूर्वयुक्त्या $अ'_1 + शे''_1 \frac{ल}{ल} = \frac{प}{ल}$, अतो यदि $शे''_1 = १$ तदा $अ''_1$ + एको भिन्नो रूपाल्पः $= \frac{प}{ल}$ । परन्तु $\frac{प}{ल}$ अयं " अ " अस्मात् सूक्ष्मोऽस्य $\sqrt{न}$ मानमेव तेन $\frac{प}{ल} > अ$ । अतः $अ''_1 = अ$ ।

( १ ) अस्मिन् प्रथमं पदं विहायान्यत् किमपि यदि " अ " अस्मात् शोध्यते तर्हि शेषं ( २ ) अस्मिन् तत्सम्बन्धि यत्पदं तस्मादल्पं भविष्यति । यतः पूर्वयुक्त्या $अ''_1 \, ल + शे''_1 \, ल = प$ अतः $\frac{ल}{ल} = \frac{१}{शे''_1}\left(\frac{प}{ल} - अ''_1\right)$ तेन $शे''_1 > \frac{प}{ल} - अ''_1$ यतः $\frac{ल}{ल} < १$ परन्तु $\frac{प}{ल} > अ$ । अतः $अ - अ''_1$ सुतरां $शे''_1$ अस्मादल्पम् । (१) अस्मिन् सर्वाणि पदानि "अ" मानादल्पानि (२) अस्मिंश्च २अ—मानादल्पानि । अस्थानेषु अमानादल्पाः भिन्ना भिन्नाः संख्याः २अस्थानेषु च २अ—मानादल्पाःभिन्ना भिन्नाः संख्याः स्थातुं योग्याः । अतः श्रेढीद्वये भिन्ना भिन्नाः संख्याः २अ तुल्यस्थानतोऽल्पेष्वेव स्थानेषु स्थातुं योग्या नाधिकेषु । अतः श्रेढीद्वये कतिपयपदानन्तरं पुनः पुनस्तान्येव मानानि आगमिष्यन्ति ।

कल्प्यते ( १ ), ( २ ), ( ३ ) श्रेढीषु क्रमेण पदानि ।

$अ_१, अ_२, अ_३, \ldots . अ_{न-१}, अ_न, अ_{न+१}, \ldots . अ_{म-१}, अ_म, अ_{म+१}$ ।

$तं_१, तं_२, तं_३, \ldots . तं_{न-१}, तं_न, तं_{न+१}, \ldots . तं_{म-१}, तं_म, तं_{म+१}, \ldots .$

$क_१, क_२, क_३, \ldots . क_{न-१}, क_न, क_{न+१} \ldots . क_{म-१}, क_म, क_{म+१}, \ldots$

पूर्वयुक्तित इदं सिद्धमेव यतः पुनः पुनस्तानि मानानि भविष्यन्ति ।

कल्प्यते न, ( म—१ ) एतदन्तर्गतेषु पदेषु एतद्द्वयसहितेषु पदमानानामावर्त्तो जातस्तदा ।

$\text{अ}_{\text{म}} = \text{अ}_{\text{न}}$, $\text{अ}_{\text{म}+१} = \text{अ}_{\text{न}+१}$, $\text{अ}_{\text{म}+२} = \text{अ}_{\text{न}+२}$ ;................

$\text{क}_{\text{म}} = \text{क}_{\text{न}}$, $\text{क}_{\text{म}+१} = \text{क}_{\text{न}+१}$, $\text{क}_{\text{म}+२} = \text{क}_{\text{म}+२}$ ;...............

$\text{त}_{\text{म}} = \text{त}_{\text{न}}$, $\text{त}_{\text{म}+१} = \text{त}_{\text{न}+१}$, $\text{त}_{\text{म}+२} = \text{त}_{\text{न}+२}$,...............

एवं सति–

$\text{अ}_{\text{म}-१} = \text{अ}_{\text{न}-१}$, $\text{क}_{\text{म}-१} = \text{क}_{\text{न}-१}$, $\text{त}_{\text{म}-१} = \text{त}_{\text{न}-१}$, एवं भविष्यति ।

क्रियाकरणानुसारेण–

$\text{त}_{\text{न}-१}\,\text{त}_{\text{न}} = \text{ना} - \text{अ}^{२}_{\text{न}}$, $\text{त}_{\text{म}-१}\,\text{त}_{\text{म}} = \text{ना} - \text{अ}^{२}_{\text{म}}$ ।

परन्तु $\text{त}_{\text{म}} = \text{त}_{\text{न}}$ तथा $\text{अ}_{\text{म}} = \text{अ}_{\text{न}}$ । अतः $\text{त}_{\text{म}-१} = \text{त}_{\text{न}-१}$ ।

पुनः $\text{अ}_{\text{न}-१} + \text{अ}_{\text{न}} = \text{त}_{\text{न}-१}\,\text{क}_{\text{न}-१}$, $\text{अ}_{\text{म}-१} + \text{अ}_{\text{म}} = \text{त}_{\text{म}-१}\,\text{क}_{\text{म}-१}$

अतः $\text{अ}_{\text{म}-१} - \text{अ}_{\text{न}-१} = \text{त}_{\text{न}-१}\left(\text{क}_{\text{म}-१} - \text{क}_{\text{न}-१}\right)$

$\therefore \dfrac{\text{अ}_{\text{म}-१} - \text{अ}_{\text{न}-१}}{\text{त}_{\text{न}-१}} = \text{क}_{\text{म}-१} - \text{क}_{\text{न}-१}$ इदं शून्येन वा केनचिदभिन्नेन समं भविष्यति । परन्तु पूर्वयुक्त्या $\text{अ} - \text{अ}_{\text{न}-१} < \text{त}_{\text{न}-१}$, $\text{अ} - \text{अ}_{\text{म}-१} < \text{त}_{\text{म}-१}$ अर्थात् $< \text{त}_{\text{न}-१}$ । अतः $\text{अ}_{\text{म}-१} - \text{अ}_{\text{न}-१} < \text{त}_{\text{न}-१}$ ।

तेन $\dfrac{\text{अ}_{\text{म}-१} - \text{अ}_{\text{न}-१}}{\text{त}_{\text{न}-१}} < १$ तेन $\text{क}_{\text{म}-१} - \text{क}_{\text{न}-१} < १$

परन्तु पूर्वसिद्धमिदं $\text{अ}_{\text{म}-१} - \text{अ}_{\text{न}-१}$ शून्येन वाऽभिन्नेन समम् अतः समीकरणविषमीकरणयोरैक्यात् $\text{अ}_{\text{म}-१} - \text{अ}_{\text{न}-१}$ इदं शून्येन समं भविष्यति तेन $\text{अ}_{\text{म}-१} = \text{अ}_{\text{न}-१}$ अतो यदि न–पदमावर्त्तं तदा न–१ पदमपि आवर्त्तं भवति । परन्तु एतादृशी स्थितिस्तदैव यदा न > ३ यतः पूर्वयुक्तिर्या प्रतिपादिता सा पदत्रयाधिकपदेष्वेव ।

एवं क्रियाकरणेऽभिन्ना निरग्रा लब्धिः २अ–समा भविष्यति । यतो यदि अन्तिमा समग्रा लब्धिः$= \dfrac{\sqrt{\text{ना}} + \text{अ}_{\text{म}}}{\text{त}_{\text{म}}}$ तदा ततोऽनन्तरं $\dfrac{\sqrt{\text{ना}} + \text{अ}}{\text{त}}$ एवं भविष्यति ततः पूर्वयुक्त्या ।

$अ_म + अ = त_म क_म$, $त_म त = ना - अ^२$ अत्र, सर्वत्र ना=अवर्गसंख्यामानम् । परन्तु $त = ना - अ^२$ । अतः $त_म = १$ ततः पूर्वयुक्त्या $अ_म = अ \therefore २ अ = क_म$ ।

$$\text{कल्प्यते } य = अ + \cfrac{१}{क + \cfrac{१}{\ddots\; च + \cfrac{१}{ज + \cfrac{१}{र + \cdots}}}}$$

यत्र अ, क,........इत्यादिलब्धयोऽनावर्तास्तथा

$$र = त + \cfrac{१}{स + \cfrac{१}{\ddots\; स_१ + \cfrac{१}{स_२ + \cfrac{१}{र}}}}$$

यत्र त, स,........इत्यादि—लब्धय आवर्त्ताः ।

कल्प्यते $\frac{पं}{लं}$ इदमासन्नमानं $\sqrt{ना}$ अस्य अनावर्त्तलब्धिवशेन तत्पृ-ष्ठासन्नमानं च $\frac{प}{ल}$ । तदासन्नमानानयनयुक्त्या र-सावयवलब्धिग्रहणेन

$$य = \frac{पंर + प}{लंर + ल} \quad \ldots\ldots\ldots\ldots\ldots\ldots\ (१)$$

कल्प्यते $\frac{पां}{लां}$ इदमासन्नमानं त, स,....$स_२$ आवर्त्तलब्धिवशेन तत्पृ-ष्ठासन्नमानं च $\frac{पा}{ला}$ तदा र-सावयवलब्धिग्रहणेन ।

$$र = \frac{पांर + पा}{लांर + ला} \quad \ldots\ldots\ldots\ldots\ldots\ldots\ (२)$$

( १ ) ( २ ) अभ्यां वर्गसमीकरणाविधिना द्विविध—र—मानेन द्वि-विधा यमितिरागमिष्यति । तयोर्या धनात्मिका सैवात्रोपयुक्ता ।

( २ ) अनेन $लांर^२ + लार = पांर + पा \therefore लांर^२ + ( ला - पां ) र = पा$

$$\text{ततः } र = \frac{\text{पां}-\text{ला}}{२\,\text{लां}} \pm \sqrt{\frac{(\text{ला}-\text{पां})^२ + ४\text{लांपा}}{४\text{लां}^२}}$$

पूर्वप्रतिपादितसमीकरणेऽस्मिन् ।

$शे''_१ (प.\ लं - पं.\ ल) = लं^२न - पं^२$ ।

आसन्नमानानयनयुक्त्या $प.\ लं - पं.\ ल = \pm १$

तेन $\pm शे''_१ = लं^२न - पं^२$

पक्षान्तरानयनेन $पं^२ = लं^२न \pm शे''_१$

अतो यस्या आसन्नमूलमपेक्षितं सा संख्या चेत्प्रकृतिः कल्प्यते तदा तदासन्नमानस्य हरः कनिष्ठं लवश्च ज्येष्ठं भवति तदग्रिमशेषसमे क्षेपे, इति सिध्यति, अर्थादासन्नमानस्य समत्वे तदग्रिमशेषसमधनक्षेपे विषमत्वे तु तदाग्रिमशेषसमर्णक्षेपे हरांशमाने क्रमेण कनिष्ठज्येष्ठे भवत इति । अतो यदा तच्छेपमानं रूपसमं स्यात्तदा यदासन्नमानं तत्र हरांशमाने रूपक्षेपे वा रूपशुद्धौ ह्रस्वज्येष्ठे अभिन्ने भवतोऽतो मदुक्तं सूत्रम् ॥

निरग्रं पदं यद्गुणात् स्यात् फलाख्यं
धनाख्यं तदेवात्र शेषं तदग्रम् ।
पदाढ्यं धनं शेषहृद्ध्यग्रमन्यत्
फलं तद्धतं शेष[illegible] धनेन ॥ १ ॥
धनाख्यं नवं [illegible] कृत्या विहीनो
गुणः शेषभक्तोऽन्यशेषस्य मानम् ।
मुहुस्त्वेवमन्ते यदा शेषमानं
भवेद्रूपतुल्यं तदा लब्धितोये ॥ २ ॥
गुणाप्ती विधुक्षेपके कुट्टकेन
भवेतां पदे ते समा लब्धयश्चेत् ।
विधुक्षेपकेऽथान्यथा रूपशुद्धा-
वभिन्ने सकृत्कुट्टकेनैव तूर्णम् ॥ ३ ॥

यथा भास्कराचार्योक्तप्रश्ने प्रकृतिः ६७ । अस्या निरग्रं पदम् ८ । शेषं ३ ततः सूत्रानुसारेण ।

| ध | शे | फ | वल्ली |
|---|---|---|---|
| ८ | ३ | ८ | ८ |
| ७ | ६ | ५ | ५ |
| ५ | ७ | २ | २ |
| २ | ९ | १ | १ |
| ७ | २ | १ | १ |
| ७ | ९ | ७ | ७ |
| २ | ७ | १ | १ |
| ५ | ६ | १ | १ |
| ७ | ३ | २ | २ |
| ८ | १ | ५ | ५ |
| | | | १ |
| | | | ० |

वल्लीतो जाते गुणाप्ती ५९६७ । ४८८४२ लब्धयः समाः सन्त्यतो जाते कनिष्ठज्येष्ठे रूपक्षेपे क ५९६७ ज्ये ४८८४२ एते एव मुहुः कुट्टकविधिना समासभावनया च चक्रवालनाचार्योक्तयाप्यागच्छतः।

अथ प्रकृतेरासन्नमूलज्ञानार्थं मदुक्तं सूत्रम् ।

रूपक्षेपे कनिष्ठं यज्ज्येष्ठं तेन हृतं पदम् ।

आसन्नं प्रकृतेर्ज्ञेयं सूक्ष्मं बहुकनिष्ठतः ॥

अत्रोपपत्तिः । कनिष्ठज्येष्ठवर्गरूपाभ्यामितिसुगमेति किं ग्रन्थगौरवेण।

अथ चक्रवालगणिते दृढाङ्कसिद्धान्तेन नूतनः क्षेपो निरग्रो जातस्तदर्थं कतिपयदृढाङ्कसिद्धान्तान् प्रदर्शये । अत्र संख्याशब्देनाङ्केन वा सर्वत्र पूर्णा धनसंख्या ग्राह्या ।

( १ ) या संख्या स्वीयेन वा रूपेणैव निःशेषा भवति सा दृढसंख्या यथा, २, ३, ५, ७ इत्यादयः । अतोऽन्यथाऽदृढसंख्या ज्ञेया । यथा, ४, ६, ८, ९, इत्यादयः ।

(२) रूपाद्येकोत्तरा अङ्का यथेच्छाः क्रमेण स्थाप्याः । यथा

१, २, ३, ४, ५, ६, ७, ८, ९, १०
११, १२, १३, १४, १५, १६, १७, १८, १९, २०
२१, २२, २३, २४, २५, २६, २७, २८, २९, ३०
३१, ३२, ३३, ३४, ३५, ३६, ३७, ३८, ३९, ४०
४१, ४२, ४३, ४४, ४५, ४६, ४७, ४८, ४९, ५०

( इत्यादयः )

अत्र प्रथमं २ दृढसंख्या ग्राह्या । अनया या या एकान्तरा अपवर्त्त्या भवन्ति तासामुपरि विन्दुः स्थाप्यः । ततोऽपरा अचिन्हिता ३ संख्या ग्राह्या । अनया या या द्व्यान्तरा अपवर्त्त्यास्तासामुपरि पुनर्विन्दुः स्थाप्यः । ततोऽप्यपरा अचिन्हिता ५ संख्या ग्राह्या । अनया चतुरन्तरिता या या अपवर्त्त्यास्तासामुपरि पुनर्विन्दुः स्थाप्यः । ततोऽपरा अचिन्हिता ११ संख्या ग्राह्या । अनया या या दशान्तरिता अपवर्त्त्यास्तासामुपरि पुनर्विन्दुः स्थाप्यः । एवं ततोऽप्यपरामचिन्हितां संख्यां गृहीत्वा क्रिया कार्या । एवं यावतीः संख्याः संगृह्य क्रिया कृता तासामचिन्हिता दृढा ज्ञेयाः । यथा अत्र १-५० संख्या गृहीतास्तत्र २, ३, ५, ७, ११, १३, १७, १९, २३, २९, ३१, ३७, ४१, ४३,

४७ अचिन्हिता दृढा ज्ञेया यतस्ताः स्वीयेन वा रूपेणैवापवर्त्या भवन्ति ।

( ३ ) एकद्वित्र्यादिभेदा अभिन्ना धनात्मकाश्च सन्तीति प्रत्यक्षतो दृश्यते । अतो यदि न—संख्यकानां र—संख्यका भेदाः न $\text{भे}_{\text{र}}$ अनेन द्योतनीयाः स्युस्तदा भेदानयनेन $\text{नभे}_{\text{र}} = \frac{\text{न}(\text{न}-१)(\text{न}-२)\,.\,(\text{न}-\text{र}+१)}{१.\,२\,३\,.....\text{र}}$ एते अभिन्नाः । अतो व्यस्तगणनया एकोत्तराणां र—संख्यकानां बधः एकाद्येकोत्तर—र—संख्यकाबधेन निःशेषो भवतीति सिध्यति । एकाद्येकोत्तर-र—संख्यकानां बधो लाघवेन $\underline{|\text{र}}$ अनेन प्रकाश्यते । यथा

$१.\,२.\,३.....\text{न} = \underline{|\text{न}}$ , $१.२.३....\text{म} = \underline{|\text{म}}$

$१.\,२.\,३.....\,\text{र} = \underline{|\text{र}}$ इत्यादयो भवन्ति । एवमेतत्सङ्केतेन $\underline{|\text{न}}$ अयं लाघवेन न—भावितमित्युच्यते ।

$$\text{नभे}_{\text{र}} = \frac{\text{न}(\text{न}-१)(\text{न}-२)\,.\,(\text{न}-\text{र}+१)}{१\;२.\;३.\,...\;\text{र}} = \frac{\text{न}(\text{न}-१)(\text{न}-२)\,.\,(\text{न}-\text{र}+१)}{\underline{|\text{र}}}$$

$$= \frac{\text{न}(\text{न}-१)(\text{न}-२)\,...\,(\text{न}-\text{र}+१)\,\underline{|\text{न}-\text{र}}}{\underline{|\text{र}}\;\underline{|\text{न}-\text{र}}} = \frac{\underline{|\text{न}}}{\underline{|\text{र}}\;\underline{|\text{न}-\text{र}}} \text{ इति सिध्यति ।}$$

एवम्, $\text{नभे}_{\text{र}} = \frac{\underline{|\text{न}}}{\underline{|\text{र}}\;\underline{|\text{न}-\text{र}}} = \text{न भे}_{\text{न}-\text{र}}$ .... ( १ )

( ४ ) अ, क, ग अङ्कानां मध्ये यदि अ, क मिथो दृढौ, क. ग अयं च अ—भक्तो निःशेषो भवति तदा अ—संख्यया ग—संख्या निशेषा भवतीति पूर्वं प्रतिपादितम् । एतत्सिद्धान्तबलेनाधो लिखिताः सिद्धान्ताः सुखेनोपपद्यन्ते ।

( आ ) यदि अ, क मिथो दृढौ तदा $\text{अ}^{\text{न}}$, $\text{क}^{\text{म}}$ एतौ च दृढौ भवतः ।

( का ) यदि अ, क, ग, घ.... मिथो दृढास्तदा

$\text{अ}^{\text{न}}$, $\text{क}.^{\text{प}}$ $\text{ग}.^{\text{म}}$ $\text{घ}.^{\text{ब}}$....मिथो दृढौ भवतः ।

( गा ) $अ_1$, $अ_2$, $अ_3$....,$क_1$, $क_2$, $क_3$....इत्यादिषु यदि $अ_1$,....$अ_3$....प्रत्येकं $क_1$, $क_2$....प्रत्येकेनाङ्केन दृढं तदा $अ_1अ_2अ_3$...., $क_1क_2क_3$....मिथो दृढौ भवतः ।

( ९ ) $\frac{य}{र}$ इत्यत्र या निरग्रा लब्धिः सा नि$\left(\frac{य}{र}\right)$ अनेन प्रकाश्यते । अथ अ-दृढसंख्यायाः कः स महत्तमघातो येना $\underline{|न}$ यं निःशेषो भवतीति विचार्यते ।

$\underline{|न}$ अत्र यावन्ति गुणकखण्डानि अ, २अ, ३अ,....इत्यादि, तत्खण्डसंख्याप्रमाणम् = नि $\left(\frac{न}{अ}\right)$ = $नि_1$ । एवं यानि $अ^2$ शुद्धानि खण्डानि तत्प्रमाणम् = नि $\left(\frac{न}{अ^2}\right)$ । एवं $न^3$, $न^4$....शुद्धानां प्रमाणानि विदितानि भवन्ति ततः सर्वखण्डसंख्यायोगसमः अ-दृढाङ्कघातो महत्तमो येना $\underline{|न}$ यं निःशेषो भवति । यथा

उदा. ( १ ), १. २. ३.....१९ = $\underline{|१९}$ अयं २ दृढाङ्कस्य केन महत्तमघातेन निःशेषो भवति । अत्र

$$नि\left(\frac{१९}{२}\right) = ९ \text{ । } नि\left(\frac{१९}{२^2}\right) = ४ \text{ । } नि\left(\frac{१९}{२^3}\right)$$

= २ । नि$\left(\frac{१९}{२^4}\right)$ = १ । अतः ९+४+२+१= १६ अयमेव महत्तमघाताङ्कः । येन अर्थात् $२^{१६}$ अनेना $\underline{|१९}$ यं निःशेषो भवतीति ।

( १० ) $मभे_र = \frac{म(म-१)(म-२) \quad (म-र+१)}{१ \; २ \; ३ ...... र}$, अयं पूर्वयुक्तितोऽभिन्नः । अथ यदि म—दृढसंख्या भवेत्तर्हि तदल्पाः १,२,...., र सर्वा मतो दृढा भविष्यन्ति । अतः ( म—१ )( म—२ )....( म—र+१ ) इयं संख्या $\underline{|र}$ अनेन निःशेषा भविष्याति । अतो यदि

$$\frac{(म-१)(म-२) \ldots (म-र+१)}{\underline{|र}} = ल, \text{ तदा } मभे_र = म.ल \text{ ।}$$

अतस्तदा $मभे_र$ अयं म—दृढाङ्कनापवर्त्त्यो भवति । म, अङ्केन योऽपवर्त्त्यो भवति सोऽ अप( म ) नेन द्योत्यते ।

( ७ ) द्वियुक्पदसिद्धान्तेन $( य+र )^{म} = य^{म} + म\, य^{म-१}\, र + \frac{म(म-१)}{|\underline{२}} य^{म-२} र^{२} + \ldots . र^{म}$ । अत्र म, $\frac{म(म-१)}{|\underline{२}}$, $\frac{म(म-१)(म-२)}{|\underline{३}}$ एते सर्वे गुणका अभिन्नाः । आद्यन्तगुणकविहीनाः सर्वे गुणका यदि म-दृढाङ्को भवेत्तर्हि, म-दृढाङ्केनापवर्त्या भवन्ति । एवं द्वियुक्पदसिद्धान्तेनैव यदि म-दृढाङ्को भवेत्तदा

$$( य + र + ल + व + \ldots . )^{म} = य^{म} + र^{म} + ल^{म} + \ldots . + अप ( म )$$

इति सिध्यति । अत्र यदि य, र, ल, वादीनां संख्या ना भवेत्तथा सर्वे वर्णा रूपसमाः स्युस्तदा $( १+१+\ldots . )^{म} = ना^{म} = ना + अप ( म )$

$$\therefore ना^{म} - ना = ना ( ना^{म-१} - १ ) = अप ( म )$$

अत्र यदि ना, म-दृढश्चैतौ मिथो दृढौ तदा पूर्वयुक्तितः

$$ना^{म-१} - १ = अप ( म ) \text{ इति सिध्यति ।}$$

अयमेव फरमट-गणकस्य सिद्धान्तः ( Fermat's Theorem )

( ८ ) यदि $अ_{१} + क_{१} य + क_{२} य^{२} + क_{३} य^{३} + \ldots .( १ )$ अनेन दृढसंख्यैव विदिता भवेत् तदा कल्प्यते यदि य=न, तदाऽनेन दृढसंख्या म भवतीति । तदा $म = अ_{१} + क_{१} न + क_{२} न^{२} + क_{३} न^{३} + \ldots .$ ( २ )

( १ ) अस्मिन् यदि $य = न + न_{१} म$ तदा ( १ ) समीकरणस्य

$$रूपम् = अ_{१} + क_{१} न + क_{१} न_{१} म + क_{२} ( न + न_{१} म )^{२} + \ldots .$$

$$= अ_{१} + क_{१} न + क_{२} न^{२} + क_{३} न^{३} + \ldots . + अप ( म )$$

$$= म + अप( म )$$

अर्थात्, इदं म-संख्ययाऽपवर्त्यं भवेत् । अतो न किमपि बीजगणितेन सूत्रं कर्तुं शक्यते येन दृढसंख्यैव द्योतिता भवेत् ।

( ९ ) यदि न-दृढसंख्या स्यात्तर्हि $१ + |\underline{न-१}$ अयं न-संख्ययाऽपवर्त्यो भवति । अयमेव विलसन-गणकस्य सिद्धान्तः (Wilson's Theorem

अस्योपपत्त्यर्थं प्रथमं दीर्घवृत्तलक्षणेन

$$इ^{य}=१+य+\frac{य^{२}}{१\;२}+\frac{य^{३}}{१\;२\;३}+\ldots$$

$$\therefore\; इ^{य}-१=य+\frac{य^{२}}{१\cdot२}+\frac{य^{३}}{१\;२\;३}+\ldots$$

$( इ^{य}-१ )^{प}=( य+\frac{य^{२}}{१\;२}+\ldots )^{प}$ । अत्र द्वियुक्पदसिद्धान्तेन दक्षिणपक्षे $य^{प}$ अस्य गुणकः $= १$ । वामपक्षे चा-

$$( इ^{य}-१ )^{प}=इ^{यप}-प\,इ^{य(प-१)}+\frac{प(प-१)}{\underline{|२}}\,इ^{य(प-२)}-\ldots$$

स्मिन्

प्रथम पदे $इ^{यप}$, $य^{प}$ गुणकः $=\frac{प^{प}}{\underline{|न}}$ ( दीर्घवृत्तलक्षणेन )

२ पदे $य^{प}$ गुणकः $=-\frac{प\,(प-१)^{प}}{\underline{|न}}$

३ .... .... .... .... $=\frac{प(प-१)}{\underline{|२}}\;\frac{(प-२)^{प}}{\underline{|न}}$

अतः सरूपसमीकरणसिद्धान्तेन वामपक्षीयो य--गुणकः

$$=\left\{प^{प}-\frac{प(प-१)^{प}}{}+\frac{प(प-१)}{\underline{|२}}(प-२)^{प}-\frac{प(प-१)(प-२)}{\underline{|३}}(प-३)^{प}+\ldots\right\}\div\underline{|प}$$

$=१=$दक्षिणपक्षीयो $य^{प}$ गुणकः । ततश्छेदगमेन

$$प^{प}-प(प-१)^{प}+\frac{प(प-१)}{\underline{|२}}(प-२)^{प}-\ldots=\underline{|प}\;,\ldots(१)$$

अत्र यदि न--दृढसंख्या तथा स्याद्यथा $न-१=प$ । तदा ( १ ) समीकरणेन $\underline{|न-१}=( न-१ )^{न-१}-\frac{न-१}{१}( न-२ )^{न-१}$

$$+\frac{(न-१)(न-२)}{\underline{|२}}(न-३)^{न-१}-\ldots\;(२)$$

अत्र न--दृढसंख्या तेन $( न-१ )^{न-१}$ अस्मिन् सर्वाणि पदानि न--अपवर्त्यानि अन्तिमं चे $१^{न-१}$ दं फरमटसिद्धान्तेन रूपहीनं तदा न--अपवर्त्यं भवेदेवं $( न-२ )^{न-१}$, $( न-३ )^{न-१}$ इत्यादिषु च स-

र्वाणि पदानि न–अपवर्त्त्यानि, अन्तिमानि $२^{न-१}$, $३^{न-१}$ इत्यादीनि च रूपहीनानि न–अपवर्त्त्यानि। एवं $(न-१)^{न-१}$, $(न-२)^{न-१}$ इत्यादिषु यदि लब्धयः $ल_१$, $ल_२$, $ल_३$,....इत्यादयः स्युस्तदा (२) समीकरणेन

$$\lfloor न-१ = ल_१ न+१ - \frac{न-१}{१}(ल_२ न+१)$$
$$+\frac{(न-१)(न-२)}{\lfloor २}(ल_३ न+१) - ....$$
$$= अप(न) + १ - \frac{न-१}{१} + \frac{(न-१)(न-२)}{\lfloor २} + ....,$$

(न–१) पदपर्यन्तम्

$$= अप(न) + (१-१)^{न-१} - १ = अप(न) - १ ।$$

$\therefore १ + \lfloor न-१ = अप(न)$ अनेन विलसन–सिद्धान्त उपपद्यते।

अनेन सिद्धान्तेन निर्दिष्टसंख्या दृढा वाऽदृढाऽस्तीति सुखेन ज्ञायते। यथा ११ इयं दृढा वाऽदृढेति प्रश्ने–

अत्र न = ११, $\lfloor न-१ + १ = १ + १.२.३.४.५.६.७.८.९.१०$ = ३६२८८०१ इयं न (११) संख्यया शुध्यति। अत ११ इयं संख्या दृढास्तीति।

(१०) (५) सिद्धान्तेन काचित्संख्या दृढाङ्कघातगुण्यगुणकखण्डरूपा भवितुमर्हति। अतः काचित् संख्या $= सं = अ^{न}.क^{त}.ग^{म}$,....। यत्र अ, क, ग दृढाः। अथात्र प्रत्यक्षतो दृश्यते यदियं $सं = अ^{न}.क^{त}.ग^{म}$,....

$$(१+अ+अ^{२}+..+अ^{न})(१+क+क^{२}+....+क^{त})$$
$$(१+ग+ग^{२}+....+ग^{म})....$$

एतेषां वधे यानि पदानि तेभ्यः सर्वेभ्योऽपवर्त्त्यो भवति।

अतः सर्वापवर्त्तकानां योगः $= (१+अ+अ^{२}+....).$
$(१+क+क^{२}+....)(१+ग+ग^{२}+....)....$

$$= \frac{अ^{न+१}-१}{अ-१} \cdot \frac{क^{न+१}-१}{क-१} \cdot \frac{ग^{म+१}-१}{ग-१} \ldots$$

तथापवर्त्तकानां संख्या च=( न+१ ) ( त+१ ) ( म+१ )....

यत्र रूपं सा संख्या चापि अपवर्त्तकत्वेन गृहीता ।

अथोपयोगिनां सिद्धान्तानां सूत्राणि ।

निजेनैव भुवा वा या संख्या शुध्यति सा दृढा ।
सन्त्यनन्ता दृढाश्चात्र संख्याः संख्यार्णवे ध्रुवम् ॥ १ ॥
परस्परं दृढा याः स्युस्तद्वर्गाद्यपि वै दृढम् ।
अन्यवर्गादिघातोऽपि स्वीयतः स्यात्तथा दृढः ॥ २ ॥
दृढयोर्भाज्यहरयोर्हरश्चेद्धिशुध्यति ।
भाज्यश्च यद्गुणस्तर्हि गुणः शुध्यति हारहृत् ॥ ३ ॥
दृढैकयुग्मादिवधेन संख्यका
पृथक् हृता याश्च निरग्रलब्धयः ।
दृढस्य तद्योगसमानघातत-
स्तत्संख्यकाभावितमेव शुध्यति ॥ ४ ॥
आद्यो दृढश्चेदपरेण वै दृढ-
स्तदा परस्य प्रथमेन तुल्यः ।
व्येकेन घातो विधुना विहीन-
आद्येन भक्तः परिशुद्धिमेति ॥ ५ ॥
तादृक् सूत्रं च युक्तिश्च यद्वशाज्ज्ञायते बुधैः ।
केवलं दृढसंख्यानां मानं नैवोपलभ्यते ॥ ६ ॥
कश्चित् स्वयं दृढश्चेत्स्यात्तर्हि तेन विशुध्यति ।
विधुना सहितं धीमन् व्येकतद्दृढभावितम् ॥ ७ ॥

अथैतन्मूलकाः कतिपयसिद्धान्ताः ।

या या हरहृताः सन्ति तुल्यशेषा हि संख्यकाः ।
तासां तुल्याग्रसंज्ञा स्यात्तद्धरस्य वशादिह ॥ ८ ॥
एकाद्येकोत्तरा अङ्का व्येकहारसमा गुणाः ।
भाज्येन हारविहृतास्तर्ह्यग्राण्यसमानि हि ॥ ९ ॥
एकाद्येकोत्तरा अङ्का व्येकहारसमाश्च ये ।
तान्येवाप्यग्रकाणीह यदि भाज्यहरौ दृढौ ॥१०॥
श्रेढ्योर्द्वयोः पदे द्वे द्वे क्रमात्तुल्याग्रके यदा ।
तदा द्वयोः सर्वपदाहती तुल्याग्रके हरात् ॥११॥
यद्धारवशतस्तुल्यशेषौ राशी तदन्तरम् ।
तद्धारविहृतं शुध्येदिति चिन्त्यं विपश्चिता ॥१२॥
दृढः कोऽपि रसैर्भक्त एकाग्रो भवति ध्रुवम् ।
पञ्चाग्रो वा सदा विद्वन् रामानल्पः स चेद् दृढः ॥१३॥
कोऽपि वर्गः शरहृतो विशुध्येदथवा भवेत् ।
एकाग्रो वेदशेषो वा दृढसिद्धान्तयुक्तितः ॥१४॥
दृढाङ्कघातः संख्यायाः कस्या अपि विहीनतः ।
तत्संख्ययैव विहृतस्तद्दृढेन विशुध्यति ॥१५॥
इत्थं संक्षेपतश्छात्रबुद्धिवृद्ध्यै द्विवेदिना ।
सुधाकरेण लिखिताः सिद्धान्ता दृढसम्भवाः ॥१६॥

इति दृढाङ्कसिद्धान्ताः समाप्ताः ॥

शुभं भूयात् । श्रीरामोऽवतु ।



॥ श्रीः ॥

# विज्ञप्तिः ।

—o—

१ अस्यां चौखम्बा-संस्कृतग्रन्थमालायां प्रतिमासं पृष्ठशतके सुन्दरैः सीसकाक्षरैरुत्तमेषु पत्रेषु एकः स्तबको मुद्रयित्वा प्रकाश्यते

२ एकस्मिन् स्तबके एक एव ग्रन्थो मुद्र्यते ।

३ प्राचीना दुर्लभाश्चाऽमुद्रिता मीमांसावेदान्तादिदर्शन,व्याकरण,धर्मशास्त्र,साहित्य, पुराणादिग्रन्था एवात्र सुपरिष्कृत्य मुद्र्यन्ते ।

४ काशिकराजकीयप्रधानसंस्कृतपाठालयाऽध्यापकाः पण्डिता एव एतत्परिशोधनादिकार्यकारिणो भवन्ति ।

५ भारतवर्षीयै,र्ब्रह्मदेशीयैः, सिंहलद्वीपवासिभिश्च एतद्ग्राहकैर्देयं

| | | | | | |
|---|---|---|---|---|---|
| वार्षिकमग्रिमं | मूल्यम् | मुद्राः | ७ | आणकाः | ८ । |
| मासिकं (व्याल्युपेब्ल्-द्वारा) | ,, | ,, | ० | ,, | १२ । |
| ६ कालान्तरे प्रतिस्तबकं | ,, | ,, | १ | ,, | ० |

७ प्र[illegible]णव्ययः पृथग् नास्ति ।

८ [illegible]तं मुद्यमाणा ग्रन्थाः— मुद्रिताः स्तबकाः

(१) संस्काररत्नमाला । गोपीनाथभट्टकृता (संस्कारः) २

(२) शब्दकौस्तुभः । भट्टोजिदीक्षितकृतः (व्याकरणम्) १०

(३) श्लोकवार्तिकम् । भट्टकुमारिलविरचितम्
पार्थसारथिमिश्रकृत-न्यायरत्नाकराख्यया
व्याख्यया सहितम् (मीमांसा) ९

(४) भाष्योपबृंहितं तत्त्वत्रयम् विशिष्टाद्वैत
दर्शनप्रकरणम् । श्रीमल्लोकाचार्य्यप्रणीतम् ॥ (वेदान्तः) १

(५) करणप्रकाशः । श्रीब्रह्मदेवविरचितः १

९ अग्रे मुद्रणीयत्वेनाभीप्सितौ ग्रन्थौ:—

विधिरसायनम् । अप्पयदीक्षितकृतम् (मीमांसा)
न्यायकणिका । वाचस्पतिमिश्रकृता ,,

एतदन्यानि कानि चित्पुस्तकानि अपेक्ष्यन्ते चेदस्मत्कार्यालयपुस्तकानां मुद्रिता महती सूची आणकार्धं संप्रेष्य द्रष्टव्या ।

पत्रादिप्रेषणस्थानम् } कार्याध्यक्षः-हरिदासगुप्तः,
चौखम्बा-संस्कृतपुस्तकालयस्य
बनारस सिटी ।